अर्श्यामयेषु त्रिफला गुडूची वातास्त्ररोगे मथितं ग्रहिण्याम्।
कुष्ठेषु सेव्यः खदिरस्य सारः सर्वेषु रोगेषु शिलाह्वयं च ॥५०॥
उन्मादं घृतमनवं शोकं मद्यं विसंस्मृतिं ब्राह्मी।
निद्रानाशं क्षीरं जयति रसाला प्रतिश्यायम् ॥ ५१ ॥
मांसं कार्श्यं लशुनः प्रभञ्जनं स्तब्धगात्रतां स्वेदः।
गुडमञ्जर्य्याः खपुरो नस्यां स्कन्धांसबाहुरुजम् ॥ ५२ ॥
नवनीतखण्डमर्दितमौष्ट्रं मूत्रं पयश्च हन्त्युदरम्।
नस्यं मूर्द्धविकारान् विद्रधिमचिरोत्थमस्रविस्रावः ॥५३॥
नस्यं कवलमुखजां नस्याञ्जनतर्पणानि नेत्ररुजः।
वृद्धत्वं क्षीरघृते मूर्च्छां शीताम्बुमारुतच्छायाः ॥५४॥
समशुक्लार्द्रकमात्रा मन्दे वह्नौ श्रमे सुरा स्नानम्।
दुःखसहत्वे स्थैर्य्यं व्यायामो गोक्षुरुहितः कृच्छ्रे ॥५५॥
कासे निदिग्धिका पार्श्वशूले पुष्करजा जटा।
वयसः स्थापने धात्री त्रिफला गुग्गुलुर्व्रणे ॥ ५६ ॥
वस्तिर्वातविकारान् पैत्तान् रेकः कफोद्भवान् वमनम्।
क्षौद्रं जयति बलासं सर्पिः पित्तं समीरणं तैलम् ॥ ५७ ॥
इत्यग्र्यं यत् प्रोक्तं रोगाणामौषधं शमायालम्।
तद्देशकालबलतो विकल्पनीयं यथायोगम् ॥५८॥
इत्यात्रेयादागमय्यार्थसूत्रं तत् सूक्तानां पेशलानामतृप्तः।
भेडादीनां सम्मतो भक्तिनम्रः प्रप्रच्छेदं संशयानोऽग्निवेशः ॥५९॥
दृश्यन्ते भगवन्! केचिदात्मवन्तोऽपि रोगिणः।
द्रव्योपस्थातृसम्पन्ना वृद्धवैद्यमतानुगाः ॥ ६० ॥
क्षीयमाणामयप्राणा विपरीतास्तथापरे।
हिताहितविभागस्य फलं तस्मादनिश्चितम् ॥ ६१ ॥
किं शास्तं शास्त्रमस्मिन्निति कल्पयतोऽग्निवेशमुख्यस्य।
शिष्यगणस्य पुनर्वसुराचख्यौ कात्स्न्र्यतस्तत्त्वम् ॥ ६२ ॥

न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ।
विनापि क्रिययाऽस्वास्थ्यं गच्छतां षोड़शांशया ॥६३॥
आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितम् ।
जीवितं म्रियमाणानां सर्वेषामेव नौषधात् ॥ ६४॥
न ह्युपायमपेक्षन्ते सर्वे रोगा न चान्यथा ।
उपायसाध्याः सिध्यन्ति नाहेतुर्हेतुमान् यतः ॥६५॥
अप्येवोपाययुक्तस्य धीमतो जातुचित् क्रिया ।
न सिध्येद्दैववैगुण्यान्न त्वियं षोड़शात्मिका ॥६६॥
कस्यासिद्धोऽग्नितोयादिस्वेदस्तम्भादिकर्मणि ।
न प्रीणनं कर्षनं वा कस्य क्षीरगवेधुकम् ॥ ६७ ॥
कस्य माषात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।
विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६८ ॥
विषं कस्य जरां याति मन्त्रतन्त्रविवर्जितम् ।
कः प्राप्तः कल्पतां पथ्यादृते रोहिणिकादिषु ॥ ६९ ॥
अपि चाकालमरणं सर्वसिद्धान्तनिश्चितम् ।
महतापि प्रयत्नेन वार्य्यतां कथमन्यथा ॥ ७० ॥
चन्दनाद्यपि दाहादौ रूढ़मागमपूर्वकम् ।
शास्त्रादेव गतं सिद्धं ज्वरे लङ्घनबृंहणम् ॥ ७१ ॥
चतुष्पादगुणसम्पन्ने सम्यगालोच्य योजिते ।
मा कथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते ॥७२॥
एतद्धि मृत्युपाशानामकण्ठे छेदनं दृढ़म् ।
रोगोत्त्रासितभीतानां रक्षासूत्रमसूत्रकम् ॥ ७३ ॥
एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम् ।
याति हालाहलत्वं च सद्यो दुर्भाजनास्थितम् ॥७४॥
अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
त्यजेद् दूराद् भिषक्पाशान् पाशान् वैवस्वतानिव ॥७५॥

भिषजां साधुवृत्तानां भद्रमागमशालिनाम्।
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम्॥ ७६॥
इति तन्त्रगुणैर्युक्तं तन्त्रदोषविवर्जितम्।
चिकित्सा शास्त्रमखिलं व्यापद्य परितः स्थितम्॥७७॥
विपुलामलविज्ञानमहामुनिमतानुगम्।
महासागरगम्भीरसंग्रहार्थोपलक्षणम्॥ ७८॥
अष्टाङ्गवैद्यकमहोदधिमन्थनेन
योऽष्टाङ्गसंग्रहमहामृतराशिराप्तः।
तस्मादनल्पफलमल्पसमुद्यमानां
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम्॥ ७९॥
इदमागमसिद्धत्वात् प्रत्यक्षफलदर्शनात्।
मन्त्रवत् सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन॥ ८०॥
दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः।
पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम्॥ ८१॥
एतत् पठन् संग्रहबोधशक्तः स्वभ्यस्तकर्मा भिषगप्रकम्प्यः।
आकम्पयत्यन्यविशालतन्त्रकृताभियोगान् यदि तन्न चित्रम्॥८२
यदि चरकमधीते तद् ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिह खलु करोतु व्याधितानां वराकः?॥८३॥
अभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढकः।
पठतु यत्नपरः पुरुषायुषं स खलु वैद्यकमाद्यमनिर्विदः॥८४॥
वाते पित्ते श्लेष्मशान्तौ च पथ्यं तैलं सर्पिर्माक्षिकञ्च क्रमेण।
एतद् ब्रह्मा भाषते ब्रह्मजो वा का निर्मन्त्रे वक्तृभेदोक्तिः?॥८५
अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते।
अतो मत्सरमुत्सृज्य माध्यस्थमवलम्ब्यताम्॥ ८६॥

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ।
भेडाद्याः किं न पठ्यन्ते तस्माद्ग्राह्यं सुभाषितम् ॥८७॥
हृदयमिव हृदयमेतत् सर्वायुर्वेदवाङ्मयपयोधेः।
दृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ॥ ८८ ॥

इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदय-
संहितायामुत्तरस्थानं समाप्तम्।

---

# सूचीपत्रम्।

## उत्तरस्थानम् ।

# मत्स्य पुराणम्।



महर्षि वेदव्यास प्रणीतम्

[illegible]

श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण

संस्कृत्य प्रकाशितम्।



कलिकाता नगरे।

सरस्वती यन्त्रे मुद्रितम्।

१८७६